# चतुश्चत्वारिंशत्तमोऽध्यायः

## सर्वोत्तमविष्णुदानविधानवर्णनम्

सनत्कुमार उवाच

अथाऽन्यत्सम्प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् । पूर्वोक्तदेशकालेव मण्डपेवविधानतः
प्रणयात्कुण्डमध्येचस्थण्डिलेशिवसन्निधौ । पूर्वं विष्णुंसमासाद्यपद्मयोनिमतःपरम्
मन्त्राभ्यां विधिनोक्ताभ्यां प्रणवादिसमन्त्रकम् ।
नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥
ब्रह्म ब्रह्मणवृद्धाय ब्रह्मणे विश्ववेधसे । शिवायहरये स्वाहा स्वधावौषट् वषट् तथा
पूजयित्वा विधानेन पश्चाद्धोमं समाचरेत् । सर्वंद्रव्याणिहोतव्यंद्वाभ्यांकुण्डविधनतः
ऋत्विजौ द्वौ प्रकर्त्तव्यौ गुरुणावेदपारगौ । तानुद्दिश्ययथान्यायंविप्रेभ्योदापयेद्धनम्
शतमष्टोत्तरं तेभ्यः पृथक् पृथगनुत्तमम् । वस्त्राभरणसंयुक्तं सर्वालङ्कारसंयुतम् ॥७॥
गुरुरेकोहि वै श्रीमान् ब्रह्माविष्णुर्महेश्वरः । तेषांपृथक् पृथग्देयं भोजयेद्ब्राह्मणानपि
शिवार्चना च कर्त्तव्या स्नपनादि यथाक्रमम् ॥ ६ ॥

इति श्रीलैङ्गे महापुराणे सर्वोत्तमविष्णुदानविधानवर्णनं नाम
चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

---

# पञ्चचत्वारिंशत्तमोऽध्यायः

## जीवच्छ्राद्धविधानवर्णनम्

ऋषय ऊचुः

एवंषोडशदानानिकथितानिशुभानिच । जीवच्छ्राद्धकमोऽस्माकंवक्तुमर्हसिसाम्प्रतम्

सूत उवाच

जीवच्छ्राद्धविधिं वक्ष्ये समासात्सर्वसम्मतम् । मनवे देवदेवेन कथितं ब्रह्मणा पुरा॥
वसिष्ठाय च शिष्टाय भृगवे भार्गवाय च । शृण्वन्तु सर्वभावेन सर्वसिद्धिकरं परम्

श्राद्धमार्गक्रमं साक्षात् श्राद्धार्हाणामपि क्रमम् ।
विशेषमपि वक्ष्यामि जीवच्छ्राद्धस्य सुव्रताः ! ॥ ४ ॥

पर्वते वा नदीतीरे वने वाऽऽयतनेऽपि वा । जीवच्छ्राद्धं प्रकर्त्तव्यं मृतकाले प्रयत्नतः
जीवच्छ्राद्धे कृते जीवो जीवन्नेवविमुच्यते । कर्मकुर्वन्नकुर्वन् वाऽज्ञानी वा ज्ञानवानपि

श्रोत्रियोऽश्रोत्रियो वाऽपि ब्राह्मणः क्षत्रियोऽपि वा ।
वैश्यो वा नाऽत्र सन्देहो योगमार्गगतो यथा ॥ ७ ॥

परीक्ष्यभूमिं विधिवद्गन्धवर्णरसादिभिः । शल्यमुद्धृत्ययत्नेन स्थण्डिलंसैकतंभुवि
मध्यतो हस्तमात्रेण कुण्डञ्चैवायतं शुभम् । स्थण्डिलंवाप्रकर्त्तव्यमिषुमात्रं पुनःपुनः
उपलिप्य विधानेन चालिप्याग्निं विधायच । अन्वाधाययथाशास्त्रं परिगृह्यच सर्वतः
परिस्तीर्य्य स्वशाखोक्तं पारम्पर्य्यक्रमागतम् । समाप्याग्निमुखंसर्वंमन्त्रैरेतैर्यथाक्रमम्
सम्पूज्यस्थण्डिलेवह्नौहोमयेत्समिदादिभिः ।आर्द्रीकृत्वासमिद्धोमंचरुणाचपृथक्पृथक्
घृतेन च पृथक् पात्रे शोभितेन पृथक्पृथक् । जुहुयादात्मनोद्धृत्य तत्त्वभूतानिसर्वतः

ॐ भूः ब्रह्मणे नमः ॥ १४ ॥ ॐ भूः ब्रह्मणे स्वाहा ॥ १५ ॥
ॐ भुवः विष्णवे नमः ॥ १६ ॥ ॐ भुवः विष्णवे स्वाहा ॥ १७ ॥
ॐ स्वः रुद्राय नमः ॥ १८ ॥ ॐ स्वः रुद्राय स्वाहा ॥ १९ ॥
ॐ महः ईश्वराय नमः ॥ २० ॥ ॐ महः ईश्वराय स्वाहा ॥ २१ ॥
ॐ जनः प्रकृतये नमः ॥ २२ ॥ ॐ जनः प्रकृत्यै स्वाहा ॥ २३ ॥
ॐ तपः मुद्गलाय नमः ॥ २४ ॥ ॐ तपः मुद्गलाय स्वाहा ॥ २५ ॥
ॐ ऋतं पुरुषाय नमः ॥ २६ ॥ ॐ ऋतं पुरुषाय स्वाहा ॥ २७ ॥
ॐ सत्यं शिवाय नमः ॥ २८ ॥ ॐ सत्यं शिवाय स्वाहा ॥ २९ ॥

ॐ शर्व ! धरां मे गोपाय घ्राणे गन्धं शर्वाय देवाय भूर्नमः ॥ ३० ॥
ॐ शर्व ! धरां मे गोपाय घ्राणे गन्धं शर्वाय भूः स्वाहा ॥ ३१ ॥
ॐ शर्व ! धरां मे गोपाय घ्राणे गन्धं शर्वस्य देवस्य पत्न्यै भूर्नमः ॥ ३२ ॥
ॐ शर्व ! धरां मे गोपाय घ्राणे गन्धं शर्वपत्न्यै भूः स्वाहा ॥ ३३ ॥

ॐ भव ! जलं मे गोपाय जिह्वायां रसम्भवाय देवाय भुवो नमः ॥ ३४ ॥
ॐ भव ! जलं मे गोपाय जिह्वायां रसम्भवाय देवाय भुवः स्वाहा ॥ ३५ ॥
ॐ भव ! जलं मे गोपाय जिह्वायां रसम्भवस्य देवस्य पत्न्यै भुवो नमः ॥
ॐ भव ! जलं मे गोपाय जिह्वायां रसम्भवस्य पत्न्यै भुवः स्वाहा ॥ ३७ ॥
ॐ रुद्राग्नि मे गोपाय नेत्रे रूपं रुद्राय स्वरों नमः ॥ ३८ ॥
ॐ रुद्राग्नि मे गोपाय नेत्रे रूपं रुद्राय देवाय स्वः स्वाहा ॥ ३९ ॥
ॐ रुद्राग्नि मे गोपाय नेत्रे रूपं रुद्रस्य देवस्य पत्न्यै स्वरों नमः ॥ ४० ॥
ॐ रुद्राग्नि मे गोपाय नेत्रे रूपं रुद्रस्य देवस्य पत्न्यै स्वः स्वाहा ॥ ४१ ॥
ॐ उग्र ! वायुं मे गोपाय त्वचि स्पर्शम् उग्राय देवाय महर्नमः ॥ ४२ ॥
ॐ उग्र ! वायुं मे गोपाय त्वचि स्पर्शम् उग्राय देवाय महः स्वाहा ॥ ४३ ॥
ॐ उग्र ! वायु मे गोपाय त्वचि स्पर्शम् उग्रस्य देवस्य पत्न्यै महरों नमः ॥४४॥
ॐ उग्र ! वायुं मे गोपाय त्वचि स्पर्शम् उग्रस्य देवस्य पत्न्यै महः स्वाहा॥४५॥
ॐ भीम ! सुषिरं मे गोपाय श्रोत्रे शब्दं भीमाय देवाय जनो नमः ॥ ४६ ॥
ॐ भीम ! सुषिरं मे गोपाय श्रोत्रे शब्दं भीमाय देवाय जनः स्वाहा ॥ ४७ ॥
ॐ भीम ! सुषिरं मे गोपाय श्रोत्रे शब्दं भीमस्य देवस्य पत्न्यै जनो नमः॥४८॥
ॐ भीम ! सुषिरं मे गोपाय श्रोत्रे शब्दं भीमस्य देवस्य पत्न्यै जनः स्वाहा॥४९
ॐ ईश ! रजो मे गोपाय द्रव्ये तृष्णाम् ईशाय देवाय तपो नमः ॥ ५० ॥
ॐ ईश ! रजो मे गोपाय द्रव्ये तृष्णामीशाय देवाय तपः स्वाहा ॥ ५१ ॥
ॐ ईश ! रजो मे गोपाय द्रव्ये तृष्णामीशस्य पत्न्यै तपो नमः ॥ ५२ ॥
ॐ ईश ! रजो मे गोपाय द्रव्ये तृष्णामीशस्य पत्न्यै तपः स्वाहा ॥ ५३ ॥
ॐ महादेव ! सत्यं मे गोपाय श्रद्धां धर्मे महादेवाय ऋतं नमः ॥ ५४ ॥
ॐ महादेव ! सत्यं मे गोपाय श्रद्धां धर्मे महादेवाय ऋतं स्वाहा ॥ ५५ ॥
ॐ महादेव ! सत्यं मे गोपाय श्रद्धां धर्मे महादेवस्य पत्न्यै ऋतं नमः ॥ ५६ ॥
ॐ महादेव ! सत्यं मे गोपाय श्रद्धां धर्मे महादेवस्य पत्न्यै ऋतं स्वाहा ॥५७॥

ॐ पशुपते ! पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपतये देवाय सत्यं नमः ॥
ॐ पशुपते ! पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपतये देवस्य सत्यं स्वाहा ॥
ॐ पशुपते ! पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपतेर्देवस्य पत्न्यै सत्यं नमः॥
ॐ पशुपते ! पाशं मे गोपाय भोक्तृत्वभोग्यं पशुपतेर्देवस्य पत्न्यै सत्यंस्वाहा
ॐ शिवाय नमः ॥ ६२ ॥ ॐ शिवाय सत्यं स्वाहा ॥ ६३ ॥

एवं शिवायहोतव्यंविरिञ्च्याद्यञ्चपूर्ववत् । विरिञ्च्याद्यञ्चपूर्वो(?)सृष्टिमार्गेषुसुव्रताः
पुनः पशुपतेः पत्नी तथा पशुपतिं क्रमात् । सम्पूज्य पूर्ववन्मन्त्रैर्होतव्यञ्च क्रमेण वै ॥
चर्वन्तमाज्यपूर्वञ्च समिधान्तं समाहितः ॥ ६६ ॥

ॐ शर्व ! धरां मे छिन्धि घ्राणे गन्धं छिन्धि मेद्यं जहि भू स्वाहा ॥ ६७ ॥
भुवः स्वाहा ॥ ६८ ॥ स्वः स्वाहा ॥ ६९ ॥ भूर्भुवः स्वः स्वाहा ॥ ७० ॥

एवं पृथक्पृथक् हुत्वा केवलेन घृतेन वा । सहस्रं वा तदर्द्धं वा शतमष्टोत्तरं तु वा ॥
विरजा च घृतेनैव शतमष्टोत्तरं पृथक । प्राणादिभिश्च जुहुयाद् घृतेनैव तु केवलम् ॥

ॐ प्राणे निविष्टोऽमृतं जुहोमि शिवो मा विशा प्रदाहाय प्राणाय स्वाहा ॥ ७३ ॥
प्राणाधिपतये रुद्राय वृषान्तकाय स्वाहा ॥ ७४ ॥
ॐ भूः स्वाहा ॥ ७५ ॥ ॐ भुवः स्वाहा ॥ ७६ ॥ ॐ स्वः स्वाहा ॥ ७७ ॥
भूर्भुवः स्वः स्वाहा ॥ ७८ ॥

एवंक्रमेणजुहुयाच्छ्राद्धोक्तञ्चयथाक्रमम् । सप्तमेऽहनि योगीन्द्राञ्छ्राद्धार्हानपिभोजयेत्
शर्वादीनाञ्च विप्राणां वस्त्राभरणकम्बलान् । वाहनं शयनंयानंकांस्यताम्रादिभाजनम्
हैमञ्च राजतं धेनुं तिलान्क्षेत्रञ्च वैभवम् । दासीदासगणञ्चैव दातव्यं दक्षिणामपि ॥
पिण्डञ्च पूर्ववद्द्यात्पृथगष्टप्रकारतः । ब्राह्मणानां सहस्रञ्च भोजयेच्च सदक्षिणम् ॥
एकं वा योगनिरतं भस्मनिष्ठं जितेन्द्रियम् । त्र्यहञ्चैव तु रुद्रस्य महाचरुनिवेदनम्
विशेष एव कथितः अशेषश्राद्धचोदितः । मृते कुर्यान्न कुर्याद्वाजीवन्मुक्तोयतः स्वयम्
नित्यनैमित्तिकादीनि कुर्य्याद्वा संत्यजेत्तु वा ।
बान्धवेऽपि मृते तस्य शौचाशौचं न विद्यते ॥ ८० ॥